नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ११ विपाकश्रुत-अङ्गसूत्रम्

## सटीकं

## (एकादशम् अङ्गसूत्रम्)

(मूलसूत्रम् + अभयदेवसूरिविरचिता वृत्तिः)

### श्रुतस्कन्धः- १

वृ. नत्वा श्रीवर्धमानाय, वर्द्धमानश्रुताध्वने ।
विपाकश्रुतशास्त्रस्य, वृत्तिरेयं विधास्यते ॥

अथ विपाकश्रुतमिति कः शब्दार्थः ?, उच्यते, विपाकः—पुण्यपापरूपकर्मफलं तत्प्रतिपादनपरं श्रुतं—आगमो विपाकश्रुतं, इदं च द्वादशाङ्गस्य प्रवचनपुरुषस्यैकादशमङ्गं, इह च शिष्टसमयपरिपालनार्थं मङ्गल-सम्बन्धाभिधेयप्रयोजनानि किल वाच्यानि भवन्ति, तत्र चाधिकृतशास्त्रस्यैव सकलकल्याण-कारिसर्ववेदिप्रणीतश्रुतरूपतया भावनन्दीरूपत्वेन मङ्गलस्वरूपत्वात् न ततो भिन्नं मङ्गलमुपदर्शनीयं, अभिधेयं च शुभाशुभकर्मणा विपाकः, स चास्य नाम्नैवाभिहितः प्रयोजनमपि श्रोतृगतमनन्तरं कर्म्मविपाकावगमरूपं नाम्नैवोक्तमस्य,

यत्किल कर्मविपाकावेदकं श्रुतं तत् श्रृण्वतां प्रायः कर्मविपाकावगमो भवत्येवेति, यत्तु निःश्रेयसावाप्तिरूपं परम्परप्रयोजनमस्य तदाप्तप्रणीततयैव प्रतीयते, न ह्याप्ता यत्कथञ्चिन्निःश्रेयसार्थं न भवति तत्प्रणयनायोत्सहन्ते आप्तत्वहानेरिति, सम्बन्धोऽप्युपायोपेयभावलक्षणो नाम्नैवास्य प्रतीयते, तथाहि—इदं शास्त्रमुपायः कर्म्मविपाकावगमस्तूपेयमिति, यस्तु गुरुपर्वक्रमलक्षणसम्बन्धोऽस्य तत्प्रतिपादनायेदमाह—

### अध्ययनं – १ – मृगापुत्रः

मू. (१) *'तेणं कालेणं तेणं समएणं चंपा णामं णयरी होत्था वण्णओ, पुन्नभद्दे चेइए,*

*तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स अंतेवासी अज्जसुहम्मेनामं अनगारे जाइसंपन्ने वण्णओ चउद्दसपुव्वी चउनाणोवगए पंचहिं अनगारसएहिं सद्धिं संपरिवुडे पुव्वाणुपुव्विं जाव जेणेव पुण्णभद्दे चेइए अहापडिरूवं जाव विहरइ,*

*परिसा निग्गया धम्मं सोच्चा निसम्म जामेव दिसं पाउब्भूया तामेव दिसं पडिगया,*

*तेणं कालेणं तेणं समएणं अज्जसुहम्मअंतेवासी अज्जजंबूनामं अनगारे सत्तुस्सेहे जहा गोयमसामी अज्जजंबूनामं अनगारे सत्तुस्सेहे जहा गोयमसामी तहा जाव झाणकोट्ठो वगए विहरति, तए णं अज्जजंबूनामे अनगारे जायसड्ढे जाव जेणेव अज्जसुहुमे अनगारे तेणेव उवागए तिक्खुत्तो*

*आयाहिणपयाहिणं करेति २ त्ता वंदति २ त्ता नमंसति २ त्ता जाव पज्जुवासति, एवं वयासी–*

वृ. 'तेणं कालेण'मित्यादि, –'तेणं कालेणं तेणं समएणं'ति तस्मिन् काले तस्मिन् समये, णंकारो वाक्यालङ्कारार्थत्वात् एकारस्य च प्राकृतप्रभवत्वात्, अथ कालसमययोः को विशषः उच्यते, सामान्यो वर्त्तमानावसर्पिणीचतुर्थारकलक्षणः कालो विशिष्टः पुस्तदेकदेशभूतः समय इति, अथवा तेन कालेन हेतुभूतेन तेन समयेन हेतुभूतेनैव 'होत्थ'त्ति अभवत्, यद्यपि इदानीमप्यस्ति सा नगरी तथाऽप्यवसर्प्पिणीकालस्वभावेन हीयमानत्वाद्वस्तुस्व- भावानां वर्णकग्रन्थोक्तस्वरूपा सुधर्मस्वामिकाले नास्तीतिकृत्वाऽतीतकालेन निर्देशः कृतः, 'वण्णओ'त्ति 'ऋद्धित्थिमियसमिद्धे'- त्यादि वर्णकोऽस्या अवगन्तव्यः, स चौपपातिकव- द्रष्टव्यः। 'पुन्नभद्दे चेइए'त्ति पूर्णभद्राभिधाने 'चैत्ये' व्यन्तरायतने 'अहापडिरूवं जाव विहरइ'त्ति –''अज्जसुहम्मे थेरे अहापडिरूवं उग्गहं उग्गिण्हइ अहा० उग्गण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ'' तत्र येन प्रकारेण प्रतिरूपः–साधूचितस्वरूपो यथाप्रतिरूपोऽतस्तमवग्रहं–आश्रयमिति 'विहरति' आस्ते, 'जामेव दिसं पाउब्भूया' यस्या दिशः सकाशात् 'प्रादुर्भूता' प्रकटीभूता आगतेत्यर्थः 'तामेव दिसं पडिगया' तस्यामेव दिशि प्रतिगतेत्यर्थः।

'सत्तुस्सेहे'त्ति सप्तहस्तोत्सेधः सप्तहस्तप्रमाण इत्यर्थः 'जहा गोयमासामी तहा' इति यथा गौतमो भगवत्यां वर्णितः तथाऽयमिह वर्णनीयः,कियद्दूरं यावत्? इत्याह– 'जाव झाणकोट्ठो'त्ति 'झाणकोट्ठोवगए' इत्येतत्पदं यावदित्यर्थः, स चायं वर्णकः–समचउरंससंठाणसंठिए वज्जरिसहनारा- यसंघयणे'त्ति विशेषणद्वयमपीदमागमसिद्धं 'कणगपुलगनिघसपम्हगोरे' कनकस्य–सुवर्णस्य यः पुलको–लवस्तस्य यो निकषः–कषपट्टे रेखालक्षणः तथा 'पम्ह'त्ति पद्मगर्भस्तद्वद् गौरो यः स तथा, 'उग्गतवे' उग्रम्–अप्रधृशष्य तपो यस्य स तथा 'दित्ततवे'दीप्तं हुताशन इव कर्मवनदाहकत्वेन ज्वलत्तेजलसत्तत्तपो यस्य स तथा 'तत्ततवे'तप्तं–तापितं तपो येन स तथा,

एवं हि तेन तपस्तप्तं येन कर्माणि संताप्य तेन तपसा स्वात्माऽपि तपोरूवः संतापितो यतोऽन्यस्यासंस्पृश्यमिव जातमिति, 'महातवे' प्रशस्ततपाः बृहत्तपा वा, 'उराले' भीमः अतिक- ष्टतपःकारितया पार्श्ववर्तिनामल्पसत्तावानां भयजनकत्वादुदारो वा प्रधान इत्यर्थः 'घोरः' निर्घृणः परीषहाद्यरातिविनाशे 'घोरगुणे' अन्यैर्दुरनुचरगुणः 'घोरतवस्सी' घोरैस्तपोभिस्तपस्वी 'घोरबंभचेर- वासी' घोरे–अल्पसत्त्वदुरनुचरत्वेन दारुणे ब्रह्मचर्ये वस्तुं शीलं यस्य स तथा 'उच्छूढसरीरे' उच्छूढम्–उज्झितमिव उज्झितं शरीरं येन तत्प्रतिकर्मत्यागात 'संखित्तविउलतेउलेस्से' संक्षिप्ता शरीरान्तर्वर्त्तिनीत्वाद्विपुला च–विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या–विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा 'उड्ढंजाणू' शुद्धपृथिव्या- सनवर्जनात् औपग्रहिकनिषद्याया अभावाच्च उत्कटुकासनः सन्नुपदिश्यते ऊर्ध्वजानुनी यस्य स उर्ध्वजानुः 'अहोसिरो' अधोमुखो नोर्द्धं तिर्यग्वा विक्षिप्तदृष्टिरिति भावः 'झाणकोट्ठोवगए' ध्यानमेव कोष्ठो ध्यानकोष्ठस्तमुपगतो यः स तथा 'विहरइ'त्ति 'संजमेणं तवसा अप्पाणं भावेमाणे विहरइ' इत्येवं दृश्यं, 'जायसड्ढे' प्रवृत्तविवक्षितार्थश्रवणवाञ्छः, यावत्करणादिदं दृश्यं 'जायसंसए' प्रवृत्तानिर्द्धारितार्थप्रत्ययः 'जायकोउहल्ले' प्रवृत्तश्रवणौत्सुक्यः ३ 'उप्पन्नसड्ढे' प्रांगभवदुद्भूतश्रवण- वाञ्छः उत्पन्नश्रद्धत्वात् प्रवृत्तश्रद्धः इत्येवं हेतुफलविवणान्न पुनरुक्तता, एवं उप्पन्नसंसए उप्पन्नकोउ-

हल्ले ३ संजायसड्ढे संजायसंसए संजायकोउहल्ले ३ समुप्पन्नसड्ढे समुप्पन्नसंसए समुप्पन्नकोउहल्ले ३' व्यक्तार्थानि, नवरमेतेषु पदेषु संशब्दः प्रकर्षादिवचनः, अन्ये त्वाहुः-'जातश्रद्धो' 'जातप्रश्नावाञ्छः १, सोऽपि कुतो ?,

यतो जातसंशयः २, सोऽपि कुतो ?, यतो जातकुतूहलः ३, अनेन पदत्रयेणावग्रहः उक्तः, एवमन्येन पदानां त्रयेण त्रयेण ईहा १ वाय २ धारणा ३ उक्ता भवन्तीति, 'तिक्खुत्तो'त्ति 'त्रिकृत्वः' त्रीन् वारान् 'आयाहिणं'ति आदक्षिणात्-दक्षिणपार्श्वादारभ्य प्रदक्षिणो-दक्षिण-पार्श्ववर्त्ती आदक्षिणप्रदक्षिणोऽतस्तं 'वंदइ'त्ति स्तुत्या 'नमंसइ'त्ति नमस्यति प्रणामतः। इह यावत्करणादिदं दृश्यं 'सुस्सूसमाणे नमंसमाणे विणएणं पंजलिउडे अभिमुहे'त्ति व्यक्तं च।

**मू. (२)** *जइ णं भंते ! समणेणं भगवया महावीरेणं जाव संपत्तेणं दसमस्स अंगस्स पण्हावागरणाणं अयमट्ठे पन्नत्ते, एक्कारसमस्स णं भंते ! अंगस्स विवागसुयस्स के अट्ठे प० ?, तते णं अज्जसुहम्मे अणगारे जंबुं अणगारं एवं वयासी- एवं खलु जंबू ! समणेणं जाव संपत्तेणं एक्कारसमस्स अंगस्स विवागसुयस्स दो सुयक्खंधा प०-दुहविवागा य १ सुहविवागा य २,*

*जइ णं भंते ! समणेणं जाव संपत्तेणं एक्करसमस्स अंगस्स विवागसुयस्स दो सुयक्खंधा प०-दुहविवागा य १ सुहविवागा य २, पढमस्स णं भंते ! सुयक्खंधस्स दुहविवागाणं समणेणं जाव संपत्तेणं कइ अज्झयणा पन्नत्ता ?, तते णं अज्जसुहम्मे अनगारे एव वयासि एवं खलु जंबू ! समणेणं० दुहविवागाणं दस अज्झयणा पन्नत्ता, तंजहा-*

**वृ.** 'दुहविवागा य'त्ति 'दुःख विपाकाः' पापकर्म फलानि दुःखानां वा-दुखहेतुत्वात् पापकर्मणां विपाकास्ते यत्राभिधेयतया सन्त्यसौ 'चरणानगर'मिति न्यायेन दुःखविपाकाः-प्रथम-श्रुतस्कन्धः, एवं द्वितीयः सुखविपाकाः 'तए णं'ति ततः-अनन्तरमित्यर्थः।

**मू. (३)** *''मियापुत्ते १ य उज्झियते २ अभग्ग ३ सगडे ४ बहस्सई ५ नंदी ६ ।*
*उंबर ७ सोरियदत्ते ८ य देवदत्ता य ९ अंजू या १० ॥''*

**वृ.** 'मियउत्ते' इत्यादिगाथा, तत्र 'मियउत्ते'त्ति मृगापुत्राभिधानराजसुतवक्त-व्यताप्रतिबद्धमध्ययनं मृगापुत्र एव १, एवं सर्वत्र, नवरम् 'उज्झियए'त्ति उज्झितको नाम सार्थवाह-पुत्रः २, 'अभग्ग'त्ति सूत्रत्वादभग्नसेनो विजयाभिधानचौरसेनापतिपुत्रः ३, 'सगडे'त्ति शकटाभिधानसार्थवाहसुतः ४, 'वहस्सइ'त्ति सूत्रत्वादेव बृहस्पतिदत्तनामा पुरोहितपुत्रः ५,

'नंदी'इति सूत्रत्वादेव नन्दिवर्द्धनो राजकुमारः ६, 'उंबर'त्ति सूत्रत्वादेव उदुम्बरदत्तो नाम सार्थवाहसुतः ७, 'सोरियदत्ते' शौरिकदत्तो नाम मत्स्यबन्धपुत्रः ८, चशब्दः समुच्चये 'देवदत्ता य'त्ति देवदत्ता नाम गृहपतिसुता ९, चः समुच्चये 'अंजू य'त्ति अञ्जूनामसार्थवाहसुता १०, चशब्दः समुच्चये, इति गाथासमासार्थः विस्तारार्थस्तु यथास्थमध्यनार्थावगमादवगम्य इति।

**मू. (४)** *जइ णं भंते ! समणेणं० आइगरेणं तित्थयरेणं जाव संपत्तेणं दुहविवागाणं दस अज्झयणा पन्नत्ता, तं०-मियापुत्ते य १ जाव अंजू य १०, पढमस्स णं भंते ! अज्झयणस्स ० के अट्ठे पन्नत्ते ?, तते णं से सुहम्मे अनगारे जंबूअनगारं एवं वयासी-*

*एवं खलु जंबू ! तेणं कालेणं तेणं समएणं मियगामे नामे नगरे होत्था वण्णओ, तस्स णं मियगामस्स नयरस्स बहिया उत्तरपुरच्छिमे दिसीभाए चंदणपायवे नामं उज्जाणे होत्था,*

*सव्वोउयवण्णओ, तत्थ णं सुहम्मस्स जक्खस्स जक्खाययणे होत्था चिरातीए जहा पुन्नभद्दे, तत्थ णं मियग्गामे नगरे विजएनामं खत्तिए राया परिवसइ वन्नओ,*

*तस्स णं विजयस्स खत्तियस्स मिया नामं देवी होत्था अहीणवन्नओ, तस्स णं विजयस्स खत्तियस्स पुत्ते मियाए देवीए अत्तए मियापुत्ते नामं दारए होत्था, जातिअंधे जाइमूए जातिबहिरे जातिपंगुले य हुंडे य वायव्वे य, नत्थि णं तस्स दारगस्स हत्था वा पाया वा कन्ना वा अच्छी वा नासा वा, केवलं से तेसिं अंगोवंगाणं आगई आगतिमित्ते, तते णं सा मियादेवी तं मियापुत्तं दारगं रहस्सियंसि भूमिधरंसि रहस्सिएणं भत्तपाणेणं पडिजागरमाणी २ विहरइ।*

**वृ.** 'एवं खलु'त्ति 'एवं' वक्ष्यमाणप्रकारेण 'खलुः' वाक्यालङ्कारे 'सव्वोउयवण्णओ'त्ति सर्वर्तुककुसुमसंछन्ने नंदनवनप्पगासे इत्यादिरुद्यानवर्णको वाच्य इति, 'चिराइए'त्ति चिरादिकं–चिरकालीनप्रारम्भमित्यादिवर्णकोपेतं वाच्यं, 'अहीणवन्नओ'त्ति 'अहीणपुन्नपंचिंदियसरीरे' इत्यादिवर्णको वाच्यः 'अत्तए'त्ति आत्मजः–सुतः 'जाइअंधे'त्ति जात्यन्धो जन्मकालादारभ्यान्धा एव 'हुंडे य'त्ति हुण्डकश्च सर्वावयवप्रमाणविकलः 'वायव्वे'त्ति वायुरस्यास्तीति वायवो–वातिक इत्यर्थः, 'आगिई आगइमेत्ते'त्ति अङ्गावयवानामाकृतिः–आकारः किंविधा ? इत्याह–आकारमात्रं नोचितस्वरूपेत्यर्थः 'रहस्सियं'ति राहसिके जनेनाविदिते 'फुट्टहडाहडसीसे'त्ति 'फुट्टं'ति स्फुटितकेश-संचयत्वेन विकीर्णकेशं 'हडहडं'ति अत्यर्थं शीर्षं–शिरो यस्य स तथा,

**मू. (५)** *तत्थ णं मियग्गामे नगरे एगे जातिअंधे पुरिसे परिवसइ, से णं एगेणं सचक्खुतेणं पुरिसेणं पुरओ दंडएणं पगढिज्जमाणे २ फुट्टहडाहडसीसे मच्छियाचडगरपहकरेणं अन्निज्जमाणमग्गे मियग्गामे नयरे गेहे २ कालुणवडियाए वित्तिं कप्पेमाणे विहरइ।*

*तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जाव समोसरिए जाव परिसा निग्गया। तए णं से विजए खत्तिए इमीसे कहाए लद्धट्ठे समाणे जहा कोणिए तहा निग्गते जाव पज्जुवासइ,*

*तते णं से जातिअंधे पुरिसे तं महया जणसद्दं जाव सुणेत्ता तं पुरिसं एवं वयासी–किन्नं देवाणुप्पिया! अज्ज मियग्गामे णगरे इंदमहेइ वा जाव निग्गच्छइ?, तते णं से पुरिसे तं जातिअंधपुरिसं एवं वयासी–नो खलु देवाणुप्पिया! इंदमहेइ वा जाव निग्गच्छति, एवं खलु देवाणुप्पिया! समणे जाव विहरति, तते णं एगे जाव निग्गच्छंति, तते णं से अंधपुरिसे तं पुरिसं एवं वयासी–गच्छामो णं देवाणुप्पिया! अम्हेवि समणं भगवं जाव पज्जुवासामो,*

*तते णं से जातिअंधे पुरिसे पुरतो दंडएणं पगढिज्जमाणे २ जेणेव समणे भगवं महावीरे तेणेव उवागए २ त्ता तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता वंदति नमंसति २ त्ता जाव पज्जुवासति, तते णं समणे० विजयस्स० तीसे य० धम्ममाइक्खति० परिसा जाव पडिगया, विजएवि गते।*

**वृ.** 'मच्छियाचडकरपहयरेणं'ति मक्षिकाणां प्रसिद्धानां चटकरप्रधानो–विस्तरवान् यः प्रहकरः–समूहः स तथा अथवा मक्षिकाचट- करकाणां–तद्वृन्दानां यः प्रहकरः स तथा तेन 'अण्णिज्जमाणमग्गे'त्ति 'अन्वीयमानमार्गः' अनुगम्यमानमार्गः, मलाविलंहि वस्तु प्रायो मक्षिकाभिरनुगम्यत एवेति 'कालुणवडियाए'त्ति कारुण्यवृत्त्या 'वित्तिं कप्पेमाणे'त्ति जीविकां कुर्वाणः।

'जाव समोसरिए'त्ति इह यावत्करणात् 'पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे'

इत्यादिवर्णको दृश्यः, 'तं महया जणसद्दं च' त्ति सूत्रत्वान्महाजनशब्दं च, इह यावत्करणात् 'जणवूहं च जणबोलं चे'त्यादि दृश्यं, तत्र जनव्यूहः-चक्राद्याकारः समूहस्तस्य शब्दस्त भेदाज्जनव्यूह एवोच्यतेऽतचस्तं बोलः-अव्यक्तवर्णो ध्वनिरिति,

'इंदमहे इ य' त्ति इन्द्रोत्सवो वा, इह यावत्करणात् 'खंदमहे वा रुद्दमहे वा जाव उज्जाणजत्ताइ वा, जत्रं बहवे उग्गा भोगा जाव एगदिसिंएगाभिमुहा' इति दृश्यम्, इतो यद्वाक्यं तदेवमनुसर्त्तव्यं, सूत्रपुस्तके सूत्राक्षराण्येव सन्तीति, 'तए णं से पुरिसे तं जाइअंधपुरिसं एवं वयासी-नो खलु देवाणुप्पिया ! अज्ज मियग्गामे नयरे इंदमहे वा जाव जत्ताइ वा जन्नं एए उग्गा जाव एगदिसिं एगाभमुहा निग्गच्छंति, एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे जाव इह समागते इह संपत्ते इहेव मियगामे नगरे मिगवणुज्जाणे अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति, तए णं से अंधपुरिसे तं पुरिसं एवं वयासी" इति, 'विजयस्स तीसे य धम्म'त्ति इदमेवं दृश्यं-'विजयस्स रन्नो तीसे य महइमहालियाते परिसाए विवित्तं धम्ममाइक्खइ जहा जीवा बज्झंती'त्यादि परिषद् यावत् परिगता 'जाइअंधे'त्ति जातेरारभ्यान्धो जात्यन्धः, स च चक्षुरुपघातादपि भवतीत्यत आह-'जायअंधारूवे'त्ति जातं-उत्पन्नमन्धकं-नयनयोरादित एवानिष्पत्तेः कुत्सिताङ्गं रूपं-स्वरूपं यस्यासौ जातान्धकरूपः० ।

मू. (६) *तेणं कालेणं तेणं समएणं समणस्स० जेट्ठे अंतेवासी इंदभूतिनामं अनगारे जाव विहरइ, तते णं से भगवं २ गोयमे तं जातिअंधपुरिसं पासइ २ त्ता जायसड्ढे जाव एवं वयासी-*

*अत्थि णं भंते ! केइं पुरिसे जातिअंधे जातिअंधारूवे ?, हंता अत्थि, कहण्णं भंते ! से पुरिसे जातिअंधे जातिअंधारूवे ?, एवं खलु गोयमा ! इहेव मियग्गामे नगरे विजयस्स खत्तियस्स पुत्ते मियादेवीए अत्तए मियापुत्ते नामं दारए जातिअंधे जातियअंधारूवे, नत्थि णं तस्स दारगस्सजाव आगतिमित्ते, तते णं सा मियादेवी जाव पडिजागरमाणी २ विहरति, तते णं से भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसति २ त्ता एवं वयासी-*

*इच्छामि णं भंते ! अहं तुब्भेहिं अब्भणुन्नाए समाणे मियापुत्तं दारगं पासित्तए, अहासुहं देवाणुप्पिया !, तते णं से भगवं गोयमे समणेणं भगवया० अब्भणुन्नाए समाणे हट्ठे तुट्ठे समणस्स भगवओ० अंतियाओ पडिनिक्खमइ २ त्ता अतुरियं जाव सोहेमाणे २ जेणेव मियग्गामे नगरे तेणेव उवागच्छति २ त्ता मियग्गामं नगरं मज्झंमज्झेण जेणेव मियादेवीए गेहे तेणेव उवागए,*

*तते णं सा मियादेवी भगवं गोयमं एज्जमाणं पासइ २ त्ता हट्ठतुट्ठ जाव एवं वयासी-संदिसंतु णं देवाणुप्पिया ! किमागमणपयोयणं ?, तते णं भगवं गोयमे मियादेविं एवं वयासी-अहन्नं देवाणुप्पिए ! तव पुत्तं पासितुं हव्वमागए, तते णं सा मियादेवी मियापुत्तस्स दारगस्स अणुमग्गजायते चत्तारि पुत्ते सव्वालंकारविभूसिए करेति २ त्ता भगवतो गोयमस्स पादेसु पाडेति २ त्ता एवं वयासी- एए णं भंते ! मम पुत्ते पासह, तते णं से भगवं गोयमे मियादेविं एवं वयासी-नो खलु देवा० अहं एए तव पुत्ते पासिउं हव्वमागते, तत्थ णं जे से तव जेट्ठे मियापुत्ते दारए जाइअंधे जातिअंधारूवे जं णं तुमं रहस्सियंसि भूमिघरंसि रहस्सिएणं भत्तपाणेणं पडिजागरमाणी २ विहरसि तं णं अहं पासिउं हव्वमागए, तते णं सा मियादेवी भगवं गोयमं एवं वयासी-से के णं गोयमा ! से तहारूवे नाणी या तवस्सी वा जेणं तव एसमट्ठे मम ताव रहस्सिकए तुब्भं हव्वमक्खाए जओ*

*णं तुब्भे जाणह ?, तते णं भगवं गोयमे मियादेवीं एवं वयासी–एवं खलु देवाणुप्पिया ! मम धम्मायरिए समणे भगवं महावीरे जतो णं अहं जाणामि, जावं च णं मियादेवी भगवया गोयमेण सद्धिं एयमट्ठं संलवति तावं च णं मियापुत्तस्स दारगस्स भत्तवेला जाया यावि होत्था, तते णं सा मियादेवी भगवं गोयमं एवं वयासी–*

*तुब्भे णं भंते ! इहं चेव चिट्ठह जा णं अहं तुब्भं मियापुत्तं दारगं उवदंसेमित्तिकट्टु जेणेव भत्तपानघरे तेणेव उवागच्छति उवागच्छित्ता वत्थपरियट्टयं करेति वत्थपरियट्टयं करित्ता कट्ठसगडियं गिण्हति कट्ठसगडियं गिण्हित्ता विपुलस्स असनपानखाइमसाइमस्स भरेति विपुलस्स असणपाणखाइमसाइमस्स भरित्ता तं कट्ठसगडियं अणुकड्ढमाणी २ जेणामेव भगवं गोयमे तेणेव उवागच्छति उवागच्छित्ता भगवं गोयमं एवं वयासी– एह णं तुब्भे भंते ! मम अणुगच्छह जा णं अहं तुब्भं मियापुत्तं दारगं उवदंसेमि, तते णं से भगवं गोयमे मियं देविं पिट्ठओ समणुगच्छति, तते णं सा मियादेवी तं कट्ठसगडियं अनुकड्ढमाणी २ जेणेव भूमिघरे तेणेव उवागच्छइ २ त्ता चउप्पुडेणं वत्थेणं मुहं बंधेति मुहं बंधमाणि भगवं गोयमं एवं वयासी–तुब्भेऽवि णं भंते ! मुहपोत्तियाए मुहं बंधह, तते णं से भगवं गोयमे मियादेवीए एवं वुत्ते समाणे मुहपोत्तियाए मुहं बंधेति, तते णं सा मियादेवी परम्मुही भूमियरस्स दुवारं विहाडेति,*

*तते णं गंधे निग्गच्छति से जहानामए अहिमडेति वा सप्पकडेवरे इ वा जाव ततोऽविणं अनिट्ठतराए चेव जाव गंधे पन्नत्ते, तते णं से मियापुत्ते दारए तस्स विपुलस्स असनपानखाइमसाइमस्स गंधेणं अभिभूते समाणे तंसि विपुलंसि असन० मुच्छिते० तं विपुलं असणं ४ आसएणं आहारेति आहारित्ता खिप्पामेव विद्धंसेति विद्धंसेत्ता ततो पच्छा पूयत्ताए य सोणियत्ताए य परिणामेति तंपि य णं पूयं च सोणियं च आहारेति, तते णं भगवओ गोयमस्स तं मियापुत्तं दारयं पासित्ता अयमेयारूवे समुप्पज्जित्था–अहो णं इमे दारए पुरापोराणाणं दुच्चिण्णाणं दुप्पडिक्कताणं असुभाणं पावाणं कडाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरति, न मे दिट्ठा नरगा वा नेरइया वा पच्चक्खं खलु अयं पुरिसे नरयपडिरूवियं वेयणं वेयतित्तिकट्टु मियं देविं आपुच्छति २ त्ता मियाए देवीए गिहाओ पडिनिक्खमति गिहा २ त्ता मियग्गामं नगरं मज्झंमज्झेणं निग्गच्छति नि २ त्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छति २ त्ता समणं० तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता वंदति नमंसति २ त्ता एवं वयासी–*

*एवं खलु अहं तुब्भेहिं अब्भणुण्णाए समाणे मियग्गामं नगरं मज्झंमज्झेणं अणुपविसामि जेणेव मियाए देवीए गेहे तेणेव उवागते, तते णं सा मियादेवी ममं एज्जमाणं पासइ २ त्ता हट्ठा तं चेव सव्वं जाव पूयं च सोणियं च आहारेति, तते णं मम इमे अज्झत्थिए समुप्पज्जित्था–अहो णं इमे दारए पुरा जाव विहरइ ।*

**वृ.** 'अतुरियं'ति अत्वरितं मनःस्थैर्यात्, यावत्करणादिदं दृश्यम्– 'अचवलमसंभंते जुगंतरलोयणाए दिट्ठीए पुरओ रियं'ति तत्राचपलं–कायचापल्याभावात् क्रियाविशेषणे चैते, तथा 'असंभ्रान्तः' भ्रमरहितः युगं–यूपस्तत्प्रमाणो भूभागोऽपि युगं तस्यान्तरमध्ये प्रलोकनं यस्याः सा तथा तया दृष्ट्या–चक्षुषा 'रियं'ति ईर्या–गमनं तद्विषयो मार्गोऽपीर्याऽतस्तां 'जेणेव'त्ति यस्मिन् देशे 'हट्ठजाव' त्ति 'हट्ठतुट्ठमाणंदिए' इत्यादि दृश्यम्, 'हव्वं'ति शीघ्रम । 'जओ णं'ति यस्मात् । २

'जाया यावि होत्था' जाता चाप्यभवदित्यर्थः । 'वत्थपरियट्टं' ति वस्त्रपरिवर्त्तनम् । 'से जहानामए' त्ति तद्यथा नामेति वाक्यालङ्कारे 'अहिमडेइ वा सप्पकडेवरे इ वा' इह यावत्करणात् 'गोमडेइ वा सुणहमडेइ वा' इत्यादि द्रष्टव्यम् । 'ततोवि णं' ति ततोऽपि– अहिकडेवरादिगन्धादपि । 'अनिट्ठतराए चेव' त्ति अनिष्टतर एव गन्ध इति गम्यते, इह यावत्करणात् 'अकंततराए चेव अपियतराए चेव अमणुन्नतराए चेव अमणामतराए चेव' त्ति दृश्यम्, एकार्थाश्चैते 'मुच्छिए' इत्यत्र 'गढिते गिद्धे अज्झोववन्ने' इति पदत्रयमन्यद् दृश्यम्, एकार्थान्येतानि चत्वार्यपीति

'अज्झत्थिए' इत्यत्र 'चिंतिए कप्पिए पत्थिए मणोगए संकप्पे' इति दृश्यम्, एतान्यप्येकार्थानि 'पुरापोराणाणं दुच्चिन्नाणं' इहाक्षरघटना 'पुराणानां' जरठानां कक्खडीभूतानामित्यर्थः 'पुरा' पूर्वकाले 'दुश्चीर्णानां' प्राणातिपातादिदुश्चरितहेतुकानां 'दुप्पडिक्कंताणं' ति दुःशब्दोऽभावार्थस्तेन प्रायश्चित्तप्रतिपत्त्यादिना अप्रतिक्रान्तानां–अनिवर्त्तितविपाकानामित्यर्थः, 'असुभाणं' ति असुखहेतूनां 'पावाणं' ति पापानां दुष्टस्वभावानां 'कम्माणं' ति ज्ञानावरणादीनाम् ।

*मू. (७) से णं भंते ! पुरिसे पुव्वभवे के आसि कयरंसि गामंसि वा नयरंसि वा किं वा दच्चा किं वा भोच्चा किं वा समायरित्ता केसिं वा पुरा जाव विहरति ?, गोयमाइ समणे भगवं महावीरे भगवं गोयमं एवं वयासी– एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे २ भारहे वासे सयदुवारे नामं नगरे होत्था रिद्धत्थिमिए वन्नओ, तत्थ णं सयदुवारे नगरे धनवई नामं राया हुत्था वण्णओ, तस्स णं नगरस्स अदूरसामंते दाहिणपुरच्छिमे दिसीभाए विजयवद्धमाणे नामं खेडे होत्था रिद्धत्थिमियसमिद्धे, तस्स ण खेडस्स पंच गामसयाइं आभोए यावि हुत्था,*

*तत्थ णं विजयवद्धमाणे खेडे इक्काई णामं रट्ठकूडे होत्था अहम्मिए जाव दुप्पडियाणंदे, से णं इक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स पंचण्हं गामसयाणं आहेवच्चं जाव पालेमाणे विहरइ, तए णं से इक्काई बहूहिं करेहि य भरेहि य विद्धीहि य उक्कोडाहि य पराभवेहि य दिज्जेहि य भेज्जेहि य कुंतेहि य लंछपोसेहि य आलीवणेहि य पंथकोट्टेहि य उवीलेमाणे २ विहम्मेमाणे २ तज्जेमाणे २ तालेमाणे २ निद्धणे करेमाणे २ विहरति ।*

*तते णं से इक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स बहूणं राईसरतलवरमाडंबियकोडुंबिय-सेट्ठिसत्थवाहणं अन्नेसिं च बहूणं गामेल्लगपुरिसाणं बहुसु कज्जेसु य कारणेसु य संतेसु य गुज्झेसु य निच्छएसु य ववहारेसु य सुणमाणे भणति– न सुणेमि असुणमाणे भणति– सुणेमि एवं पस्समाणे भासमाणे गिण्हमाणे जाणमाणे, तते णं से इक्काई रट्ठकूडे एयकम्मे एयप्पहाणे एयविज्जे एयसमायारे सुबहुं पावकम्मं कलिकलुसं समज्जिणमाणे विहरति, तते णं तस्स इक्काईस्स रट्ठकूडस्स अन्नया कयाइं सरीरगंसि जमगसमगमेव सोलस रोगायंका पाउब्भूया, तंजहा–*

*मू. (८) सासे १ कासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगंदरे ६ ।*
*अरिसा ७ अजीरए ८ दिट्ठी ९, मुद्धसूले १० अकारए ११ ॥*
*अच्छिवेयणा १२ कन्नवेयणा १३ कंडू १४ उदरे १५ कोढे १६ ।*

वृ. 'पुव्वभवे के आसि' इत्यत एवमध्येयं– 'किंनामए वा किंगोत्तए वा' नाम–याद्दच्छिकमभिधानं गोत्रं तु–यथार्थं कुलं वा 'कयरंसि गामंसि वा नगरंसि वा किं वा दच्चा किं वा भोच्चा किं वा समायरेत्ता केसिं वा पुरा पोराणाणं दुच्चिन्नाणं दुप्पडिक्कताणं असुहाणं पावाणं कम्माणं

पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरइ'त्ति।

'ऋद्धित्थिमिए'त्ति ऋद्धिप्रधानं स्तिमितं च–निर्भयं यत्तत्तथा, 'वण्णओ'त्ति नगरवर्णकः, स चौपपातिकवद्रष्टव्यः, 'अदूरसामंते'त्ति नातिदूरे न च समीपे इत्यर्थः, 'खेडे'त्ति धूलीप्राकारं 'रिद्ध'त्ति 'रिद्धकत्थमियसमिद्धे' इति द्रष्टव्यम्, 'आभोए'त्ति विस्तारः 'रट्ठउडत्ति राष्ट्रकूडे–मण्डलोपजीवी राजनियोगिकः, 'अहम्मिए'त्ति अधार्म्मिको यावत्करणादिदं दृश्यम्–'अधम्माणुए अधम्मिट्ठे अधम्मपलोई अधम्मपलज्जणे अधम्मसमुदाचारे अधम्मेणं चेव वित्तिं कप्पेमाणे दुस्सीले दुव्वए'त्ति, तत्र अधार्मिकत्वप्रपञ्चनायोच्यते–'अधम्माणुए' अधर्म्म–श्रुतचारित्रभावं अनुगच्छतीत्यधर्म्मानुगः, कुत एतदेवमित्याह–अधम्म एव इष्टो–वल्लभः पूजितो वा यस्य सोऽधर्म्मिष्टः अतिशयेन वाऽधर्म्मी–धर्मवर्जित इत्यधर्म्मिष्टः, अत एवाधर्माख्यायी–अधर्म्मप्रतिपादकः अधर्मख्यातिर्वा–अविद्यमानधर्मोऽयमित्येवंप्रसिद्धिकः, तथाऽधर्म्म प्रलोकयति–उपादेयतया प्रेक्षते यः स तथा, अत एवाधर्मप्ररजनः–अधर्मरागी अत एवाधर्मः समुदाचारः–समाचारो यस्य स तथा, अत एवाधर्मेण–हिंसादिना वृत्तिं–जीविकां कल्पयन् सन् दुःशीलाः–शुभस्वाभावहीनः दुर्व्रतश्च–व्रतवर्जितः दुष्प्रत्यानन्दः–साधुदर्शनादिना नानन्दतीति।

'आहेवच्चं'ति अधिपतिकर्म्म, यावत्करणादिदं दृश्यं–'पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे'त्ति तत्र पुरोवर्त्तित्वं–अग्रेसरत्वं स्वामित्वं–नायकत्वं भर्तृत्वं–पोषकत्वं महत्तरकत्वं–उत्तमत्वं आज्ञेश्वरस्य–आज्ञाप्रधानस्य यत्सेनापतित्वं तदाज्ञेश्वरसेनापत्यं कारयन्–नियोगिकैर्विधापयन् पालयन् स्वयमेवेति।

'करेहि य'त्ति करैः–क्षेत्राद्याश्रितराजदेयद्रव्यैः 'भरेहि य'त्ति तेषामेव प्राचुर्यैः 'विद्धीहि य'त्ति वृद्धिभिः–कुटुम्बिनां वितीर्णस्य धान्यस्य द्विगुणादेर्ग्रहणैः, वृत्तिभिरिति क्वचित्, तत्र वृत्तयो–राजदेशकारिणां जीविकाः, 'उक्कोडाहि य'त्ति लञ्चाभिः 'पराभएहि य'त्ति पराभवैः 'देज्जेहि य' अनाभवद्दातव्यैः 'भेज्जेहि य'त्ति यानि पुरुषमारणाद्यपराधमाश्रित्य ग्रामादिषु दण्डद्रव्याणि निपतन्ति कौटुम्बिकान् प्रति च भेदेनोद्ग्राह्यन्ते तानि भेद्यानि अतस्तैः 'कुंतेहि य'त्ति कुन्तकम्–एतावद्रव्यं त्वया देयमित्येवं नियन्त्रणया नियोगिकस्य देशादेर्यत्समर्प्पणमिति, 'लंछपोसेहि य'त्ति लञ्छाः–चौरविशेषाः संभाव्यन्ते तेषां पोषाः–पोषणानि तैः, 'आलीवणेहि य'त्ति व्याकुललोकानां मोषणार्थं ग्रामादिप्रदीपनकैः 'पंथकोट्टेहि य'त्ति सार्थघातैः 'उवीलेमाणे'त्ति अवपीलयन्–बाधयन् । 'विहम्मेमाणे'त्ति विधर्म्मयन्–स्वाचारभ्रष्टान् कुर्वन् 'तज्जमाणे'त्ति कृतावष्टम्भान् तर्जयन्–ज्ञानस्य रे यन्मम इदं च इदं च न दत्त्वेत्येवं भेषयन् 'तालेमाणे'त्ति कशचपेटादिभिस्ताडयन् 'निद्धणे करेमाणे'त्ति निर्द्धनान् कुर्वन् विहरति। 'तए णं से इक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स सत्कानां बहूणं राईसरतलवरमाडंबियकोडुंबियसेट्ठिसत्थवाहाणं' इह तलवराः– राजप्रसादवन्तो राजोत्थासनिकाः 'माडम्बिकाः' मडम्बाधिपतयो मडम्बं च–योजनद्वयाभ्य- न्तरेऽविद्यमानग्रामादिनिवेशः सन्निवेशविशेषः शेषाः प्रसिद्धाः,

'कज्जेसु'त्ति कार्येषु–प्रयोजनेषु अनिष्पन्नेषु 'कारणेसु'त्ति सिसाधयिषितप्रयोजनोपायेषु विषयभूतेषु ये मन्त्रादयो व्यवहारान्तस्तेषु, तत्र मन्त्राः–पर्यालोचनानि गुह्यानि–रहस्यानि निश्चया–रहस्यानि निश्चय–वस्तुनिर्णयः व्यवहारा–विवादास्तेषु विषये। 'एयकम्मे' एतद्व्यापारः एतदेववा

कान्यं–कमनीयं यस्य स तथा, 'एयप्पहाणे'त्ति एतत्प्रधानः एतन्निष्ठ इत्यर्थः, 'एयविज्जे'त्ति एषैव विद्या–विज्ञानं यस्य स, 'एयसामायारे'त्ति एतज्जीतकल्प, 'पावकम्मं'ति अशुभं– ज्ञानावरणादि 'कलिकलुसं'ति कलहहेतुकलुषं मलीमसमित्यर्थः, । 'जमगसमगं'ति युगपत् 'रोगायंक'त्ति रोगा–व्याधयस्त एवातङ्काः–कष्टजीवतकारिणः 'सासे' इत्यादि श्लोकः, 'जोणिसूले'त्ति अपपाठः 'कुच्छिसूले' इत्यस्यन्यत्र दर्शनात्, 'भगंदले'त्ति भगन्दरः 'अकारए'त्ति अरोचकः, 'अच्छिवेयणा' इत्यादि श्लोकातिरिक्तं, 'उदरे'त्ति जलोदरं । श्रृङ्गाटकादयः स्थानविशेषाः ।

मू. (९) *तते णं से इक्काई रट्ठकूडे सोलसहिं रोगायंकेहिं अभिभूए समाणे कोडुंबियपुरिसे सगद्दावेइ २ त्ता एव वयासी–गच्छह णं तुब्भे देवाणुप्पिया ! विजयवद्धमाणे खेडे संघाडगतिग-चउक्कचच्चरमहापहपहेसु महया २ सद्देणं उग्घोसेमाणा २ एवं वदह–इहं खलु देवाणुप्पिया ! इक्काईरट्ठकूडस्स सरीरगंसि सोलस रोगायंका पाउब्भूया, तंजहा–सासे १ कासे २ जरे ३ जाव कोढे १६, तं जो णं इच्छति देवाणुप्पिया ! विज्जो वा विज्जपुत्तो वा जाणुओ वा जाणुयपुत्तो वा तेगिच्छी वा तेगिच्छिपुत्तो वा इक्काईरट्ठकूडस्स तेसिं सोलसण्हं रोगायंकाणं एगमवि रोगायंकं उवसामित्तए तस्स णं इक्काई रट्ठकूडे विपुलं अत्थसंपयाणं दलयति, दोच्चंपि तच्चंपि उग्घोसेह २ त्ता एयमाणत्तियं पच्चप्पिणह, तते णं ते कोडुंबियपुरिसा जाव पच्चप्पिणंति,*

*तते णं से विजयवद्धमाणे खेडे इमं एयारूवं उग्घोसणं सोच्चा निसम्म बहवे विज्जा य ६ सत्थकोसहत्थगया सएहिं २ गिहेहिंतो पडिनिक्खमंति २ त्ता विजयवद्धमाणस्स खेडस्स मज्झंमज्झेणं जेणेव इक्काईरट्ठकूडस्स गिहे तेणेव उवागच्छइ २ त्ता इक्काईरट्ठकूडस्स सरीरगं परामुसंति २ त्ता तेसिं रोगाणं निदाणं पुच्छति २ त्ता इक्काईरट्ठकूडस्स बहूहिं अब्भंगेहि य उव्वट्टणाहि य सिणेहपाणेहि य वमणेहि य विरेयणेहि य अवद्दहणाहि य अवण्हाणेहि य अणुवासणाहि य वत्थिकम्मेहि य निरुहेहि य सिरावेहेहि य तच्छणेहि य पच्छणेहि य सिरोवत्थीहि य तप्पणाहि य पुडपागेहि य छल्लीहि य मूलेहि य कंदेहि य पत्तेहि य पुप्फेहि य फलेहि य बीएहि य सिलियाहि य गुलियाहि य ओसहेहि य भेसज्जेहि य इच्छंति तेसिं सोलसण्हं रोगायंकाणं एगमवि रोगायंकं उवसमावित्तए, नो चेव णं संचाएंति उवसामित्तए। तते णं ते बहवे विज्जा य विज्जपुत्ता य जाहे नो संचाएंति तेसिं सोलसण्हं रोगायंककाणं एगमवि रोगायंकं उवसामित्तए ताहे संता तंता परितंता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया, तते णं इक्काईरट्ठकूडे विज्जेहि य ६ पडियाइक्खिए परियारगपरिचत्ते निविण्णोसहभेसज्जे सोलसरोगायंकेहिं अभिभूए समाणे रज्जे य रट्ठे य जाव अंतउरे य मुच्छिए रज्जं च रट्ठं च आसाएमाणे पत्थेमाणे पीहेमाणे अभिलसमाणे अट्टदुहट्टवसट्टे अड्ढाइज्जाइं वाससयाइं परमाउयं पालइत्ता कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए उक्कोसेणं सागरोवमट्ठितीएसु नेरइएसु नेरइयत्ताए उववन्ने, से णं ततो अनंतरं उव्वट्टित्ता इहेव मियग्गामे णगरे विजयस्स खत्तियस्स मियाए देवीए कुच्छिंसि पुत्तत्ताए उववन्ने,*

*तते णं तीसे मियाए देवीए सरीरे वेयणा पाउब्भूया उज्जला जाव जलंता, जप्पभिइं च णं मियापुत्ते दारए मियाए देवीए कुच्छिंसि गब्भत्ताए उववन्ने तप्पभिइं च णं मियादेवी विजयस्स अनिट्ठा अकंता अप्पिया अमणुन्ना अमणामा जाया यावि होत्था, तते णं तीसे मियाए देवीए अन्नया कयाइं पुव्वरत्तावरत्तकालसमयंसि कुडुंबजागरियाए जागरमाणीए इमे एयारूवे अज्झत्थिए*

*जाव समुप्पज्जित्था – एवं खलु अहं विजयस्स खत्तियस्स पुव्विं इट्ठा ६ धेज्जा वेसासिया अणुमया आसी, जप्पभिइं च णं मम इमे गब्भे कुच्छिंसि गब्भत्ताए उववन्ने तप्पभिइं च णं अहं विजयस्स खत्तियस्स अनिट्ठा जाव अमणामा जाया यावि होत्था, निच्छति णं विजए खत्तिए मम नामं वा गोयं वा गिण्हित्तए वा किमंग पुण दंसणं वा परिभोगं वा ?, तं सेयं खलु मम एयं गब्भं बहूहिं गब्भसाडणाहि य पाडणाहि य गालणाहि य मारणाहि य साडित्तए वा ४, एवं संपेहेइ संपेहित्ता बहूणि खाराणि य कडुयाणि य तूवराणि य गब्भसाडणाणि य खायमाणी य पीयमाणी य इच्छति तं गब्भं साडित्तए वा ४ नो चेव णं से गब्भे सडइ वा ४ ।*

*तते णं सा मियादेवी जाहे नो संचाएति तं गब्भं साडेत्तए वा ४ ताहे संता तंता परितंता अकामिया असवसा तं गब्भं दुहंदुहेणं परिवहइ, तस्स णं दारगस्स गब्भगयस्स चेव अट्ठ नालीओ अब्भिंतरप्पवहाओ अट्ठ नालीओ बाहिरप्पवहाओ अट्ठ पूयप्पवहाओ अट्ठ सोणियप्पवहाओ दुवे दुवे कन्नंतरेसु दुवे दुवे अच्छिंतरेसु दुवे नक्कंतरेसु दुवे दुवे धमणिअंतरेसु अभिक्खणं अभिक्खणं पूयं च सोणियं च परिसवमाणीओ २ चेव चिट्ठंति, तस्स णं दारगस्स गब्भगयस्स चेव अग्गिए नामं वाही पाउब्भूए जे णं से दारए आहारेति से णं खिप्पामेव विद्धंसमागच्छति पूयत्ताए सोणियत्ताए य परिणमति, तंपि य से पूयं च सोणियं च आहारेति, तते णं सा मियादेवी अन्नया कयाइं नवण्हं मासाणं बहुपडिपुन्नाणं दारगं पयाया जातिअंधे जाव आगइमित्ते, तते णं सा मियादेवी तं दारगं हुंडं अंधारूवं पासति २ त्ता भीया ४ अम्मधाइं सद्दावेति २ त्ता एवं वयासी–गच्छह णं देवाणुप्पिया ! तुमं एयं दारगं एगंते उक्करुडियाए उज्झाहि, तते णं सा अम्मधाई मियादेवीए तहत्ति एयमट्ठं पडिसुणेति २ त्ता जेणेव विजए खत्तिए तेणेव उवागच्छइ (२) करयलपरिग्गहियं एवं वयासी–एवं खलु सामि ! मियादेवी नवण्हं मासाणं जाव आगतिमित्ते,*

*तते णं सा मियादेवी तं हुंडं अंधारूवं पासति २ त्ता भीया तत्था उव्विग्गा संजायभया ममं सद्दावेइ २ त्ता एवं वयासी–गच्छह णं तुब्भे देवाणुप्पिया ! एयं दारगं एगंते उक्करुडियाए उज्झाहि, तं संदिसह णं सामी ! तं दारगं अहं एगंते उज्झामि उवाहु मा ?, तते णं से विजए खत्तिये तीसे अम्मधाईए अंतिए एयमट्ठं सोच्चा तहेव संभंते उट्ठाए उट्ठेति उट्ठा २ त्ता जेणेव मियादेवी तेणेव उवागच्छति २ त्ता मियादेवीं एवं वयासी–देवाणुप्पिया ! तुब्भं पढमं गब्भे तं जइ णं तुब्भे एं एगंते उक्करुडियाए उज्झासि ततो णं तुब्भे पया नो थिरा भविस्सति,*

*तो णं तुमं एयं दारगं रहस्सियंसि भूमिघरंसि रहस्सिएणं भत्तपाणेणं पडिजागरमाणी २ विहराहि तो णं तुब्भं पया थिरा भविस्सति, तते णं सा मियादेवी विजयस्स खत्तियस्स तहत्ति एयमट्ठं विनएणं पडिसुणेति २ त्ता तं दारगं रहस्सियंसि भूमिघरंसि रह० भत्तपाणेणं पडिजागरमाणी विहरति, एवं खलु गो० ! मियापुत्ते दारए पुरापुराणाणं जाव पच्चणुब्भवमाणे विहरति ।*

वृ. 'विज्जो व'त्ति वैद्यशास्त्रे चिकित्सायां च कुशलः 'विज्जपुत्तो व'त्ति तत्पुत्रः 'जाणुओ व'त्ति ज्ञायकः–केवलशास्त्रकुशलः 'तेगिच्छिओ व'त्ति चिकित्सामात्रकुशलः 'अत्थसंपयाणं दलयइ'त्ति अर्थदानं करोतीत्यर्थः,

सत्थकोसहत्थगय'त्ति शस्त्रकोशो–नखरदनादिभाजनं हस्ते गतो–व्यवस्थितो येषां ते तथा, अवद्दहणाहि य'त्ति दम्भनैः 'अवण्हाणेहि य'त्ति तथाविधद्रव्यसंस्कृतजलेन स्नानैः

'अणुवासणाहि य'त्ति अपानेन जठरे तैलप्रवेशनैः 'वत्थिकम्मेहि य'त्ति चर्ममवेष्टनप्रयोगेण शिरःप्रभृतीनां स्नेहपूरणैः गुदे वा वर्त्यादिक्षेपणैः 'निरुहेहि य'त्ति निरुहः—अनुवास एव केवलं द्रव्यकृतोविशेषः 'सिरावेहेहि य'त्ति नाडीवेधैः 'तच्छणेहि य'त्ति क्षुरादिना त्वचस्तनूकरणैः 'पच्छणेहि य'त्ति हस्वैस्त्वचोविदारणैः 'सिरोवत्थीहि य'त्ति शिरोवस्तिभिः शिरसि बद्धस्य चर्मकोशकस्य द्रव्यसंस्कृततैलाद्यापूरणलक्षणाभिः, प्रागुक्तवस्तिकर्म्माणि सामान्यानि अनुवासना-निरुहशिरोवस्तयस्तु तद्भेदाः 'तप्पणाहि य'त्ति तर्पणैः स्नेहादिभिः शरीरबृंहणैः 'पुडपागेहि य'त्ति पुटपाकाः—पाकविशेषनिष्पन्ना औषधिविशेषाः— 'छल्लीहि य'त्ति छल्ल्यो—रोहिणीप्रभृतयः

'सिलियाहि य'त्ति शिलिकाः—किराततिक्तकप्रभृतिकाः 'गुलियाहि य'त्ति द्रव्यवटिकाः 'ओसहेहि य'त्ति औषधानि एकद्रव्यरूपाणि 'भेसज्जेहि य'त्ति भैषज्यानि—अनेकद्रव्ययोगरूपाणि पथ्यानि चेति। 'संत'त्ति श्रान्ता देहखेदेन 'तंत'त्ति तान्ता मनःखेदेन 'परितंत'त्ति उभयखेदेनेति 'रज्जे य रट्ठे य' इत्यत्र यावत्करणादिदं दृश्यं—'कोसे य कोट्ठागारे य वाहणे य'त्ति, 'मुच्छिए गढिए गिद्धे अज्झोववण्णे'त्ति एकार्थाः, 'आसाएमाणे'त्यादय एकार्थाः, 'अट्टदुहट्टवसट्टे'त्ति आर्त्तो मनसा दुःखितो—दुःखार्त्तो देहेन वशार्त्तस्तु—इन्द्रियवशेन पीडितः, ततः कर्मधारयः, 'उज्जला'इह यावत्करणादिदं दृश्यं—'विउला कक्कसा पगाढा चंडा दुहा तिव्वा दुरहियास'त्ति एकार्था एव, 'अणिट्ठा अकंता अप्पिया अमणुन्ना अमणामा' एतेऽपि तथैव।

'पुव्वरत्तावरत्तकालसमयंसि'त्ति पूर्वरात्रो—रात्रेः पूर्वभागः अपररात्रो—रात्रेः पश्चिमो भागस्तल्लक्षणो यः कालसमयः कालरूपः समयः स तथा तत्र 'कुडुंबजागरियाए'त्ति कुटुम्बचिन्त-येत्यर्थः, 'अज्झत्थिए'त्ति आध्यात्मिकः आत्मविषयः, इह चान्यन्यपि पदानि दृश्यानितद्यथा—'चिंतिए'त्ति स्मृतिरूपः 'कप्पिए'त्ति बुद्धया व्यवस्थापितः 'पत्थिए'त्ति प्रार्थितः प्रार्थनारूपः 'मणोगए'त्ति मनस्येव वृत्तो बहिरप्रकाशितः संकल्पः—पर्यालोचः, 'इट्ठे'त्यादीनि पञ्चैकार्थिकानि प्राग्वत्, 'धिज्जे'त्ति ध्येया 'वेसासिय'त्ति विश्वसनीया 'अणुमय'त्ति विप्रियदर्शनस्य पश्चादपि मता अनुमतेति, 'नामं;'ति पारिभाषिकी संज्ञा 'गोयं'त्ति गोत्रं—आन्वर्थिकी संज्ञैवेति

'किमंग पुण'त्ति किं पुनः 'अंग' इत्यामन्त्रणे 'गब्भसाडणाहिय'त्ति शातनाः—गर्भस्य खण्डशो भवनेन पतनहेतवः 'पाडणाहि य'त्ति पातनाः यैरुपायैरखण्ड एव गब्भः पतति 'गालणाहि य'त्ति यैर्गब्भो द्रवीभूय क्षरति 'मारणाहि य'त्ति मरणहेतवः। 'अकामिय'त्ति निरभिलाषाः 'असयंवस'त्ति अस्वयंवशा 'अट्ठ नालीओ'त्ति अष्टौ नाड्यः—शिराः 'अब्भिंतरप्पवहाउ'त्ति शरीरस्याभ्यन्तर एव रुधिरादि स्रवन्ति यास्तास्तथोच्यन्ते, 'बाहिरप्पवहाउ'त्ति शरीराद्बहिः पूयादि क्षरन्ति यास्तास्तथोक्ताः, एता एव षोडश विभज्यन्ते 'अट्ठे'त्यादि, कथमित्याह—'दुवे दुवे'त्ति द्वे पूयप्रवाहे द्वे च शोणितप्रवाहे, ते च क्वेत्याह— 'कन्नंतरेसु' श्रोत्ररन्ध्रयोः, एवमेताश्चतस्रः, एवमन्या अपि व्याख्येयाः, नवरं धमन्यः—कोष्ठकहड्डान्तराणि 'अग्गियए'त्ति अग्निको भस्मकाभिधानो वायुविकारः जाइअंधे' इत्यत्र यावत्करणात् 'जाइमूए' इत्यादि दृश्यं, 'हुंड'ति अव्यवस्थिताङ्गावयवं 'अंधारूवं'ति अन्धाकृतिः, 'भीया' इत्यतत्रैतदृश्यं 'तत्था उव्विग्गा संजायभया' भयप्रकर्षाभिधा-नायैकार्थाः शब्दाः, 'करयले'त्यत्र 'करयलपरिग्गहियं दसणहं मत्थए अंजलिं कट्टु' इति दृश्यं, 'नवण्ह'मित्यत्र 'मासाणं बहुपडिपुन्नाणं'मित्यादि दृश्यं, तथा 'जाइअंध'मित्यादि च, 'संभंते'ति

उत्सुकः 'उट्ठाते उट्ठेइ'त्ति उत्थानेनोत्तिष्ठति, 'पय'त्ति प्रजाः—अपत्यानि, 'रहस्सिगयंसि'त्ति राहस्यिके विजने इत्यर्थः ।

'पुरा पोराणाणं'ति पुरा—पूर्वकाले कृतानामिति गम्यम् अत एव 'पुराणानां' चिरन्तनानाम्, इह च यावत्करणात् 'दुच्चिण्णाणं दुप्पडिक्कंताणं' इत्यादि 'पावगं फलवित्तिविसेस'मित्यन्तं द्रष्टव्यम्

मू. (१०) *मियापुत्ते णं भंते ! दारए इओ कालमासे कालं किच्चा कहिं गमहिति ? कहिं उववज्जिहिति ?, गोयमा ! मियापुत्ते दारए छव्वीसं वासाइं परमाउयं पालइत्ता कालमासे कालं किच्चा इहेव जंबुद्दीवे दीवे भारहे वासे वेयड्ढगिरिपायमूले सीहकुलंसि सीहत्ताए पच्चायाहिति,*

*से णं तत्थ सीहे भविस्सति अहम्मिए जाव साहसिए सुबहूं पावं जाव समज्जिणति जाव समज्जिणित्ता कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए उक्कोससागरोवमठितीएसु जाव उववज्जिहिति, से णं ततो अनंतरं उव्वट्टित्ता सरीसवेसु उववज्जिहिति,*

*तत्थ णं कालं किच्चा दोच्चाए पुढवीए उक्कोसेणं तिन्नि सागरोवमाइं, से णं ततो अनंतरं उव्वट्टित्ता पक्खीसु उववज्जिहिति, तत्थवि कालं किच्चा तच्चाए पुढवीए सत्त सागरोवमाइं, से णं ततो सीहेसु य, तयानंतरं चोत्थीए उरगो पंचमी० इत्थी० छट्ठी० मणुआ० अ सत्तमाए, ततोऽनतरं उव्वट्टित्ता से जाइं इमाइं जलयरपंचिंदियतिरिक्खजोणियाणं नच्छकच्छभगाहमगरसुसुमारादीणं अद्धतेरस जातिकुलकोडिजोणिपमुहसयसहस्साइं तत्थ णं एगमेगंसि जोणीविहाणंसि अनेगसत्तसहस्सखुत्तो उद्दाइत्ता २ तत्थेव भुज्जो २ पच्चायाइस्सति,*

*से णं ततो उव्वट्टिता एवं चउपएसु उरपरिसप्पेसु भुयपरिसप्पेसु खहयरेसु चउरिंदिएसु तेइंदिएसु बेइंदिएसु वणप्फइएसु कडुयरुक्खेसु कडुयदुद्धिएसु वाउ० तेऊ० आऊ० पुढवी० अनेगसयसहस्सखुत्तो, से णं ततो अनतरं उव्वट्टित्ता सुपइट्ठपुरे नगरे गोणत्ताए पच्चायाहिति, से णं तत्थ उम्मुक्क जाव बालभावे अन्नया कयाइं पढमपाउसंसि गंगाए महानईए खलीयमट्टियं खणमाणे तडीए पेल्लिए समाणे कालगए तत्थेव सुपइट्ठे पुरे नगरे सेट्ठिकुलंसि पुमत्ताए पच्चायाइस्संति,*

*से णं तत्थ उम्मुक्कबालभावे जाव जोव्वणगमणुपत्ते तहारूवाणं थेराणं अंतिए धम्मं सोच्चा निसम्म मुंडे भवित्ता अगाराओ अनगारियं पव्वइस्सति, से णं तत्थ अनगारे भविस्सति ईरियासमिए जाव बंभचारी, से णं तत्थ बहूइं वासाइं सामन्नपरियागं पाउणित्ता आलोइयपडिक्कंते समाहिपत्ते कालमासे कालं किच्चा सोहम्मे कप्पे देवत्ताए उववज्जिहिति, से णं ततो अनतरं चयं चइत्ता महाविदेहे वासे जाइं कुलाइं भवंति उड्ढाइं जहा दढपइन्ने सा चेव वत्तव्वया कलाओ जाव सिज्झिहिति*

*एवं खलु जंबू !समणेणं भगवया महावीरेणं जाव संपत्तेणं दुहविवागाणं पढमस्स अज्झयणस्स अयमट्ठे पन्नत्तेत्तिबेमि ।*

वृ. 'अहम्मिए' इत्यत्र यावत्करणादिदं दृश्यं— 'वहुनगरनिग्गजसे सूरे दढप्पहारी'ति, व्यक्तं च । 'कालमासे'त्ति मरणावसरे । ४ 'सागरोवम जाव'त्ति 'सागरोपमट्ठिईएसु नेरइय-त्ताए' द्रष्टव्यम् 'जाइकुलकोडीजोणिप्पमुहसयसहस्साइं'ति जाती—पञ्चेन्द्रियजातौ कुलकोटीनां योनिप्रमुखानि—योनिद्वारकाणि योनिशतसहस्राणि। 'जोणीविहाणंसि' कत्ति योनिभेदे 'खलीणमट्टिय'त्ति खलीनां—आकाशस्थां छिन्नतटोपरिवर्त्तिनीं मृत्तिकामिति ।

'उम्मुक्क जाव'त्ति 'उम्मुक्कबालभावे विन्नयपरिणयमेत्ते जोव्वणगमणुपत्ते'त्ति दृश्यं, तत्र

विज्ञ एव विज्ञकः स चासौ परिणतमात्रश्च—बुद्ध्यादिपरिणामापन्न एव विज्ञकपरिणतमात्रः 'अनंतरं चयं चइत्त'त्ति अनन्तरं शरीरं त्यक्त्वा च्यवनं वा कृत्वा । 'जहा दढपइन्ने'त्ति औपपातिके यथा दृढप्रतिज्ञाभिधानो भव्यो वर्णितस्तथाऽयमपि वाच्यः, कस्मादेवमित्याह—'सा चेव'त्ति सैव दृढप्रतिज्ञसम्बन्धिनी अस्यापि वक्तव्यतेति, तामेव स्मरयन्नाह—'कलाओ'त्ति कलास्तेन गृहीष्यन्ते दृढप्रतिज्ञेनेव यावत्करणाच्च प्रव्रज्याग्रहणादिः तस्येवास्य वाच्यं, यावत्सेत्स्यतीत्यादि पदपञ्चकमिति, ततः सेत्स्यति—कृतकृत्यो भविष्यति भोत्स्यते—केवलज्ञानेन सकलं ज्ञेयं ज्ञास्यति मोक्ष्यति—सकलकर्मविनिमुक्तो भविष्यति परिनिर्वास्यति—सकलकर्मकृतसन्तापरहितो भविष्यति, किमुक्तं भवति ?—सर्वदुःखानामन्तं करिष्यतीति

अध्ययनं – १ – समाप्तम्

## अध्ययनं – २ – उज्झितकः

मू. (११) *जइ णं भंते ! समणेणं जाव संपत्तेणं दुहविवागाणं पढमस्स अज्झयणस्स अयमट्ठे पन्नत्ते दोच्चस्स णं भंते ! अज्झयणस्स दुहविवागाणं समणेणं जाव संपत्तेणं के अट्ठे पन्नत्ते ?, तते णं से सुहम्मे अनगारे जंबूं अनगारं एवं वयासी—एवं खलु जंबू ! तेणं कालेणं तेणं समएणं वाणियगामे नामं नयरे होत्था रिद्धित्थिमियसमद्धे, तस्स णं वाणियगामस्स उत्तरपुरच्छिमे दिसीभाए दुईपलासे नामं उज्जाणे होत्था, तत्थ णं दूइपलासे सुहम्मस्स जक्खस्स जक्खायवणे होत्था, तत्त णं वाणियगामे मित्ते नामं राया होत्था वन्नओ,*

*तस्स णं मित्तस्स रन्नो सिरीनामं देवी होत्था वण्णओ, तत्थ णं वाणियगामे कामज्झया नामं गणिया होत्था अहीण जाव सुरूवा बावत्तरिक- लापंडिया चउसट्ठिगणियागुणोववेया एगूणतीसविसेसे रममाणी एक्कवीसरतिगुणप्पहाणा बत्तीसपुरिसोवयारकुसला नवंगसुत्तपडिबोहिया अट्ठारसदेसीभासाविसारया सिंगारागारचारुवेसा गीयरतिगंधव्वनट्टकुसला संगयगय० सुंदरथण० ऊसियज्झया सहस्सलंभा विदिन्नछत्तचा- मरबालवीयणीया कन्नीरहप्पयाया यावि होत्था, बहूणं गणियासहस्साणं आहेवच्चं जाव विहरइ ।*

वृ. 'अहीणे'ति अहीणपुण्णपंचिंदियसरीरेत्यर्थः, यावत्करणात्, 'लक्खणवंजणगुणोववेया माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुंदरंगी'त्यादि द्रष्टव्यं, तत्र लक्षणानि—स्वस्तिकादीनि व्यञ्जनानि—मषीतिलकादीनि गुणाः—सौभाग्यादयः मानं—जलद्रोणमानता उन्मानं— अर्द्धभार-प्रमाणता प्रमाणं—अष्टोत्तरशताङ्गुलोच्छ्रयतेति, 'बावत्तरीकलापंडिय'त्ति लेखाद्याः शकुनरुतपर्यन्ताः गणितप्रधानाः कलाः प्रायः पुरुषाणामेवाभ्यासयोग्याः स्त्रीणां तु विज्ञेया एव प्राय इति, 'चउसट्ठिग-णियागुमणोववेया' गीतनृत्यादीनि विशेषतः पण्यस्त्रीजनोचितानि यानि चतुष्षष्टिर्विज्ञानानि ते गणिकागुणाः अथवा वात्स्यायनोक्तान्यालिङ्गनादीन्यष्टौ वस्तूनि तानि च प्रत्येकमष्टभेदत्वाच्चतुः षष्टिर्भवन्तीति, चतुःषष्ट्या गणिकागुणैरुपपेता या सा तथा, एकोनत्रिंशद्विशेषा एकविंशती रतिगुणा द्वात्रिंशच्च पुरुषोपचाराः कामशास्त्रप्रसिद्धाः,

'नवंगसुत्तपडिबोहिय'त्ति द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका जिह्वा एका त्वक् च मनः

इत्येतानि नवाङ्गानि सुप्तानीव सुप्तानि यौवनेन प्रतिबोधितानि–स्वार्थग्रहणपटुतां प्रापितानि यस्याः सा तथा 'अट्ठारसदेसीभासाविसारय'त्ति रूढिगम्यं 'सींगारागारचारुवेस'त्ति शृङ्गारस्यरसविशेषस्यागारमिव चारु वेषो यस्याः सा तथा, 'गीयरइगंधव्वनट्टकुसल'त्ति गीतरतिश्वासौ गन्धर्व्वनाट्यकुशला चेति समासः, गन्धर्वं नृत्यं गीतयुक्तं नाट्यं तु नृत्यमेवेति, 'संगयगय'त्ति 'संगयगयभणियविहियविलाससललियसंलावनीउणजुत्तोवयारकुसले'ति दृश्यं सङ्गतानि–उचितानि गतादीनि यस्याःसा तथा, सललिताः–प्रसन्नतोपेता ये संलापास्तेषु निपुणा या सा तथा, युक्ताः–सङ्गता ये उपचारा–व्यवहारस्तेषु कुशला या सा तथा, ततः पदत्रयस्य कर्म्मधारयः, 'सुंदरथण'तिति एतेनेदं दृश्यं--

'सुंदरथणजहणवयणकरचरणनयणलावण्णविलासकलिय'त्ति व्यक्तं नवरं जघनं–पूर्वकटीभागः लावण्यं–आकारस्य स्पृहणीयता विलासः–स्त्रीणां चेष्टाविशेषः 'ऊसियज्झय'त्ति ऊर्द्धीकृतजयपताका सहस्रलाभेति व्यक्तं 'विदिन्नछत्तचामरवालवीयणीय'त्ति वितीर्णं–राज्ञा प्रसादतो दत्तं छत्रं चामररूपा वालव्यजनिका यस्याः सा तथा, 'कन्नीरहप्पयाया यावि होत्थ'त्ति कर्णीरथः–प्रवहणं तेन प्रयातं–गमनं यस्याः सा तथा 'वाऽपीत्ति समुच्चये 'होत्था'त्ति अभवदिति, 'आहेवच्चं'ति आधिपत्यम्–अधिपतिकर्म, इह यावत्करणादिदं दृश्यं–'पोरेवच्चं' पुरोवर्त्तित्वं०अग्रेसरत्वमित्यर्थः, 'भर्तृत्वं' पोशकत्वं 'स्वामित्वं' स्वस्वामिसम्बन्धमात्रं 'महत्तरगत्तं' महत्तरत्वं शेषवेश्याजनापेक्षया महत्तमताम् 'आणाईसरसेणावच्चं' आज्ञेश्वरः–आज्ञाप्रधानो यः सैनापतिः–सैन्यनायकस्तस्य भावः कर्म्म वा आज्ञेश्वरसेनापत्यम् आज्ञेश्वरसेनापत्यमिव आज्ञेश्वरसेनापत्यं 'कारेमाणा' कारयन्ती परैः 'पालेमाणा' पालयन्ती स्वयमिति ।

**मू. (१२)** *तत्थ णं वाणियगामे विजयमित्ते नामं सत्थवाहे परिवसति अड्ढे० तस्स णं विजयमित्तस्स सुभद्दा नामं भारिया होत्था अहीण०, तस्स णं विजयमित्तस्स पुत्ते सुभद्दाए भारियाए अत्तए उज्झियए नामं दारए होत्था अहीण जाव सुरूवे ।तेणं कालेणं तेणं समएणं समणे भगवं महावीरे समोसढे परिसा निग्गया राया निग्गओ जहा कोणिओ तहा निग्गओ धम्मो कहिओ परिसा पडिगया राया य गओ, तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूइनामं अनगारे जाव लेसे छट्ठंछट्ठेणं जहा पन्नत्तीए पढम जाव जेणेव वाणियगामे तेणेव उवा० उच्चनीयअडमाणे जेणेव रायमग्गे तेणेव ओगाढे,*

*तत्थ णं बहवे एत्थी पासइ सन्नद्धबद्धवम्मियगुडियउप्पीलियकच्छे उद्दामियघंटे नानामणिरयणविविहगेविज्जउत्तरकंचुइज्जे पडिकप्पिए झयपडागवरपंचामेलआरूढहत्थारोहे गहियाउहप्पहरणे अन्ने य तत्थ बहवे आसे पासति सन्नद्धबद्धवम्मियगुडिए आविद्धगुडिओसारियपक्खरे उत्तरकंचुइय ओचूलमुहचंडाधरचामरथासकपरिमंडियकडिए आरूढआसारोहे गहियाउहप्पहरणे ।*

*अन्ने य तत्थ बहवे पुरिसे पासइ सण्णद्धबद्धवम्मियकवए उप्पीलियसरासणपट्टीए पिणिद्धगेविज्जे विमलवबद्धचिंधपट्टे गहियाउहप्पहरणे, तेसिं च णं पुरिसाणं मज्झगयं पुरिसं पासति अवओडगबंधणं उक्कत्तकन्ननासं नेहतुप्पियगत्तं बज्झकक्खडियजुयनियत्थं कंठेगुणरत्तमल्लदामं चुण्णगुंडियगत्तं चुण्णयं बज्झपाणपीयं तिलंतिलं चेव छिज्जमाणं काकणीमंसाइं खावियं तं पावं*

*खक्खरगसएहिं हम्ममाणं अणेगनरनारीसंपरिवुडं चच्चरे चच्चरे खंडपडहएणं उग्घोसिज्जमाणं,*

*इमं च णं एयारूवं उग्घोसणं पडिसुणेति–नो खलु देवा ! उज्झियगस्स दारगस्स केइ राया वा रायपुत्तो वा अवरज्झइ अप्पणो से सयाइं कम्माइं अवरज्झन्ति।*

**वृ.** 'अहीण'त्ति 'अहीणपुन्नपंचिदियसरीरे'त्ति व्यक्तं च, यावत्करणादिदं दृश्यं 'लक्खणवंजणगुणोववेए' इत्यादि 'इंदभूई' इत्यत्र यावत्करणात् 'नामे अनगारे गोयमगोत्तेण'-मित्यादि 'संखित्तविउलतेयलेसे' इत्येतदन्तं दृश्यं। छट्ठंछट्ठेणं जहा पन्नत्तीए'त्ति यथा भगवत्यां तथेदं वाच्यं, तच्चैवं–'छट्ठंछट्ठेणं अनिक्खित्तेण तवोकम्मेणं अप्पाणं भावेमाणे विहरति, तए णं से भगवं गोयमे छट्ठक्खमणपारणगंसि' 'पढमं' इत्यत्र यावत्करणादिदं दृश्यं – पढमाए पोरिसीए सज्झायं करेति बीयाए पोरिसीए झाणं झियाति तइयाए पोरिसीए अतुरियमचवलमसंभंते मुहपोत्तियं पडिलेहेइ भायणवत्थाइं पडिलेहेइ भायणाणि पमज्जति भायणाणि उग्गाहेइ जेणेव समणे भगवं महावीरे तेणामेव उवागच्छति २ समणं भगवं महावीरं वंदइ २ एवं वयासी–इच्छामि णं भंते ! तुब्भेहिं अब्भणुण्णाए समाणे छट्ठक्खमणपारणगंसि वाणियगामे णगरे उच्चनीयमज्झिमकुलाइं घरसमुदाणस्स भिक्खायरियाए अडित्तए' गृहेषु भिक्षार्थं भिक्षाचर्यया भैक्षसमाचारेणाटितुमिति वाक्यार्थः, 'अहासुहं देवाणुप्पिया ! मा पडिबंधं' स्खलनां मा कुर्व्वित्यर्थः, 'तए णं भगवं गोयमे समणेणं ३ अब्भणुन्नाते समाणे समणस्स ३ अंतियाओ पडिनिक्खमति अतुरियमचवलमसंभंते जुगंतरप्पलोयणाए दिट्ठीए पुरओ रियं सोहेमाणे'त्ति।

'संनद्धबद्धवम्मियगुडिए'त्ति संनद्धाः–सन्नहन्या कृतसन्नाहाः तथा बद्धं कर्म्म–त्वक्त्राणविशेषो येषां ते बद्धवर्म्माणस्त एव बद्धवर्म्मिकाः, ततश्च गुडा–महांस्तनुत्राणविशेषः सा संजाता येषां ते गुडितास्ततः कर्म्मधारयः, 'उप्पीलियकच्छे'त्ति उत्पीडिता–गाढतरबद्धा कक्षा–उरोबन्धनं येषां ते तथा तान् 'उद्दामियघंटे'त्ति उद्दामिता–अपनीतबन्धना प्रलम्बिता इत्यर्थः घण्टा येषां ते तथा तान् 'नानामणिर०'त्ति नाना मणिरत्नानि विविधानि ग्रैवेयकानि–ग्रीवाभरणानि उत्तरकञ्चुकाश्च–तनुत्राणविशेषाः सन्ति येषां ते तथा, अत एव 'पडिक-प्पिए'त्ति कृतसन्नाहादि-सामग्रीकान् 'झयपडाग०' ध्वजाः– गरुडादिध्वजाः पताकाःगरुडादिवर्जितास्ताभिर्वरा ये ते तथा पञ्च आमेलकाः–शेखरका येषां ते तथा आरूढा हस्त्यारोहा–महामात्रा येषु ते तथा, ततः पदत्रयस्य कर्म्मधारयोऽतस्तान्, 'गहियाउपहप्पहरणा' गृहीतानि आयुधानिप्रहरणाय येषु अथवा आयुधान्यक्षेप्याणि प्रहरणानि तु क्षेप्याणीति।

'सन्नद्धबद्धवम्मियगुडिए'त्ति एतदेव व्याख्याति–'आविद्धगुडे ओसारियपक्खरे'त्ति आविद्धा–परिहिता गुडा येषां ते तथा, गुडा च यद्यपि हस्तिनां तनुत्राणं रूढातथाऽपि देशविशेषापेक्ष-याऽश्वानामपि संभवतीति, अवसारिता–अवलम्बिताः पक्खराः–तनुत्राणविशेषा येषां ते तथा तान्, 'उत्तरकंचुइयओचूलमुहचंडाधरचामरथासगपरिमंडियकडिय'त्ति उत्तरकञ्चुकः–तनुत्राणविशेष एव येषामस्ति ते तथा, तथाऽवचूलकैर्मुखं चण्डाधरं–रौद्राधरौष्ठं येषां ते तथा, तथा चामरैः थासकैश्च–दर्प्पणैः परिमण्डिता कटी येषां ते तथा, ततः कर्मधारयोऽस्तान्,

'उप्पीलियसरासणपट्टीए'त्ति उत्पीडिता–कृतप्रत्यञ्चारोपणा शरासनपट्टिका–धनुर्यष्टिर्बाहुपट्टिका वा यैस्ते तथा तान्, 'पिणिद्धगेविज्ज'त्ति पिनद्धं–परिहितं ग्रैवेयकं यैस्ते तथा

